धात्वर्थत्वावच्छेदेनच वह्निकरणकत्वादेरपि बाधस्याभावा [illegible]विशे ष्यतावच्छेदक सेकत्वाद्यवच्छेदेन बाधितत्वस्याभावएव मूलोल्लेखो[illegible] इति तद्ग्राहकहेतावपि विशिष्यसेकत्वादिना सेकादेर्निवेशनीयत्वात् । अन्यथाव्यभिचारात् । वेदस्थले च वाक्यार्थस्य प्रमाणान्तरा[illegible]तया उक्तप्रतीत्या प्रतीतौ नाबाधितार्थकत्वग्रहसम्भवः, अपितु वेदजन्य[illegible] त्वादिनैवेति नानुवादकता । येन पुंसा वेदजन्यज्ञानत्वादौ नाबाधितार्थ कत्व, व्याप्तिर्गृहीता तस्य वेदा न्नभवत्येव शाब्दधीरित्यपि वदन्ति । तन्न मनोरमं, विनापिवाक्यार्थस्य विशिष्यग्रहं कथाचिद्गृहीतेपि आम्नायेज न्यवाक्यजन्यत्वेनानुमित वक्तृयथार्थज्ञानसमानविषयकत्वादिनाच हेतुना तात्पर्यघटक लौकिवाक्यार्थविषयक प्रतीते रप्यबाधितार्थावगाहित्व सम्भवात्, तत्र लौकिकस्यप्रमाणताया दुर्वारत्वात् ।

वस्तु तस्तु तात्पर्यघटकप्रतीतौ विशिष्यविशेषणवद्विशेष्यविषय कत्वाभावशंकायां शाब्दबोधानुदयात् तद्बुद्धिविरोधि विशिष्य विशेष णवद्विशेष्यविषयकत्वेन प्रतीतिविषयकं तदुद्देश्यकत्व ज्ञानमेव शाब्दबोध हेतुरुपेयते, तावतैवच तात्पर्यग्रहे वाक्यार्थज्ञानापेक्षा विशेषणतावच्छेदक प्रकारकधीविधयाऽरपवादेव । नच पयःकरणकत्ववद्विशेष्यक तत्प्रकारक सेक प्रतीतीच्छयोच्चारितमित्येव विशेषणांशे निर्धर्मितावच्छेदककतात्पर्य धीरेवशाब्दबोधहेतुः, तत्रच विशेष्यतावच्छेदकसेकत्वाद्यव[illegible] विशेषणज्ञानमपेक्षितमिति नानुवादकताशब्दस्येतिवाच्यम्; प्रतीत[illegible] पृथक पयःकरणकत्वादिमद्विशेष्यकत्व सेकादिविशेष्यकत्वयो[illegible] ग्रहस्य हेतुतापेक्षया पयःकरणकत्वादिविशिष्ट सेकत्वाद्य[illegible] विष यकत्वेन प्रतीत्यवगाहिनो ज्ञानस्य हेतुत्वेलाघवात्, तादृश[illegible]पि वक्ष्यमाणप्रणाल्या वाक्यार्थज्ञानसंभवेननिर्वाहात् । गौरवसहिष्णुताया अयुक्तत्वात् । वेदस्थलेच तदर्थस्य प्रमाणांतरागम्यतया स्वर्गसाधनत्वादि धर्म प्रकारेणैवयागादिविषयस्य स्वर्गसाधनत्वादिमद्विशेष्यकत्वयागादि

अनुमानञ्च - इदं वाक्यं भ्रमादि विशिष्टज्ञानयो रन्यतरजन्यं, वाक्यत्वादिति ।

---

विषयकत्वाभ्यां स्वर्गसाधनत्वादि प्रकारक प्रतीतिविषयकस्य तात्पर्य ज्ञानस्य गुरोरप्यगत्या हेतुत्वमुपेयते, अतोनानुवादको वेदइतिमूलाशयः।

विशेषतोवाक्यार्थस्य तात्पर्यज्ञानविषयत्वे तात्पर्यग्रहमादायापि लौकिकवाक्यजन्यानुभवस्य गृहीतग्राहित्वसंभवात् वक्तृज्ञानानुमाना दुपजीवि संसर्गानुमानाधीनां वाक्यार्थानुमिति मादायानुवादकत्वोपपा दनं तात्पर्यज्ञानस्याप्युपलक्षकंबोध्यम् । कुत्रांधाविषाधीनवाक्य प्रयोक्तरि यथार्थत्वेन विशेषितं वाक्यार्थज्ञानमनुमेयं,तादृशवाक्येवा तादृशज्ञानहेतुक त्वम्, तदनुमानस्यवाक्यार्थसंसर्गानुमान मूलत्वात्, तदनुमाने च वाक्यस्य भ्रमाद्यजन्यत्वे सति भ्रमप्रमासाधारणवाक्यार्थ ज्ञानजन्यत्वं हेतुघटकम् . अतः प्रथमं तादृशवाक्यार्थ ज्ञानजन्यत्वसिद्धि रपेक्षितेति तदनुमानं दर्शयति ( इदंवाक्यमिति ) बाधितार्थक ज्ञानद्वयात्मकभ्रमजन्ये वि शिष्टवाक्यार्थज्ञानजन्यत्वाभावा द्व्यभिचारो माभू दिति भ्रमादिरूप दोषस्य साध्येन्तर्भावः । अथाग्रिम परिशेषानुमानसौकर्याय भ्रमनि रास आवश्यकः, पुरुषस्य च कस्मिंश्चिदर्थे भ्रान्तत्वनियमेन भ्रमसा मान्य निरासो बाधेनासंभवी, अतः प्रकृतवाक्यार्थगोचर भ्रमस्यैव निरसनीयतया प्रकृतवाक्यार्थभ्रमएव साध्येन्तर्भाव्यः. तथाचा बाधित वाक्यार्थगोचर भ्रमाप्रसिद्ध्या साध्याप्रसिद्धिः; यत्तु प्रकृतविशेष्ये प्रकृतविशेषणभ्रमो नविवक्षितः, अपितु प्रकृतविशेषणभ्रमएव. पयः करणकत्वादिरूपव्यतिरेकि विशेषणस्य च दाहादौ भ्रमप्रसिद्ध्या न साध्याप्रसिद्धिरिति; तन्न, पयसासिञ्चतीत्यादिवाक्यप्रयोक्तुः दाहा दौ पयःकरणकत्वादि भ्रमवत्त्वं जानतः प्रकृतविशेषणगोचर भ्रमसा मान्यनिरासा संभवेन परिशेषानुमानानिर्वाहात् प्रकृतवाक्ये यथार्थता त्पर्यावधारणासंभवात् ; यदपि भ्रमपदं स्वाविषयविशेष्यसाकांक्ष प्रकृत विशेषणं विषयकज्ञानपरं, तादृशज्ञानेच कर्तालिंगकानुमितिस्थलीय धर्मि ज्ञानकालीन तत्साकांक्ष तदनाश्रितधर्मविषयक ज्ञानांतररूप प्रत्यभिन

वाक्यार्थस्थलेऽपि प्रसिद्ध्यत्ययेवेति; तदपि न, वक्तरि तादृशज्ञानद्वय वर दशायां तन्निरासासंभवेन विशिष्टज्ञानासिद्ध्या तात्पर्यावधारणासंभवात् तदानीमपि शाब्दबोधस्यानुभाविकतया तज्ज्ञानस्यावश्यकत्वादिति चेन्न सामान्यत एव भ्रमस्य निवेश्यत्वात् । प्रकृतवाक्यार्थे भ्रमनिरासेऽवक्तरि अन विषयकभ्रमवत्त्वं जानतोऽपि तज्जन्यत्वस्याबाधितत्वेन भ्रमसामान्यजन्यत्व प्रकृतवाक्ये सुग्रहं । सामान्यतो भ्रमत्वं च स्वनिरूपितत्व स्ववृत्त्यभाव प्रतियोगिनिष्ठत्वोभयसम्बन्धेन धर्मिविशिष्टाकांक्षावज्ज्ञानत्वम् । ज्ञानेऽप्य कांक्षाया विशेषणतारूपाया विशेषणतासम्बन्धोपगमात् तस्य तद्वत्त्व निर्वाह । नचैवमपि प्रकृतवाक्यार्थभ्रमाप्रसिद्ध्यावक्तरि तन्निरासे दुर्घट इति प्रकृतवाक्यार्थज्ञाने भ्रमत्वशंकासम्भवेन प्रकृतवाक्ये भ्रम जन्यत्वानिश्चयासम्भव इति वाच्यम्, वक्तरि तन्निरासासम्भवेऽपि प्रकृत वाक्यार्थज्ञाने उक्तभ्रमत्वस्यान्यत्र प्रसिद्धस्य निरासासम्भवेन प्रकृत वाक्ये भ्रमाजन्यत्वस्य सुग्रहत्वेन परिशेषसौकर्यात् ।

अथ प्रकृतवाक्यप्रयोजकस्य वाक्यार्थज्ञानस्य यत्र प्रकृतधर्मिण्य न्यविशेषणांशे ऽन्यधर्मिणि प्रकृतविशेषणांशे वा भ्रमत्वग्रहः तत्र प्रकृत वाक्ये भ्रमाजन्यत्वासिद्धिः, तज्जनकज्ञाने भ्रमत्व निरासासम्भवात्, यदि च परिशेषहेतुघटकं भ्रमाजन्यत्व भ्रमत्वघटकविषयत्वाप्रयोज्यत्वं, तच्च प्रकृतवाक्य प्रयोजकविषयतासामान्ये भ्रमत्वघटकत्वनिरासात्सु ग्रहमित्युच्यते, तदा प्रकृतवाक्यार्थे भ्रान्तत्वनिरासानुपयोगेन "अतएवा भिन्नवाक्यार्थेऽयमभ्रान्त आप्त इति ज्ञातुमशक्य" मित्यग्रिमग्रन्थेन वाक्यार्था प्रसिद्ध्या भ्रमनिरासानुपपत्त्याशंकाया असंगतिः, एवं वाक्यप्रयोग कारणीभूतवाक्यार्थज्ञानीय किंचिद्विषयांशे यत्र भ्रमत्वग्रहः तत्र परिशेषासम्भवः अत्र प्रथमानुमानेऽन्यतर घटकविशिष्टज्ञानं यदि यत्किंचिद्धर्मिणि यत्किंचिद्धर्मविशिष्टज्ञानमात्रं विवक्ष्यते तदा परिशेषा नुमानहेतावपि भ्रमाजन्यत्वे सति तादृशज्ञानभ्रमान्यतरजन्यत्वमेव निवेश्यं, तथासति वाक्यार्थान्तरज्ञानजन्य वाक्यान्तरप्रयोक्तरि प्रकृतवा

क्यार्थं यथार्थज्ञानरूपसाध्यस्य व्यभिचारः; यदि प्रकृतविशेष्यसाकांक्ष प्रकृतविशेषणज्ञानमेव, व्यभिचारवारणाय परिशेषानुमानहेतौ निवेश्यते तदा तादृशज्ञानत्वेन भ्रमस्यापि परिग्रहा त्पृथक् भ्रमप्रमान्तर्भाव्यान्यतरनिवेशोऽव्यर्थः, भ्रमाद्यजन्यत्वेसति तादृशज्ञानजन्यत्व निवेशेनैवसामञ्जस्यात्; एवं सति तादृशज्ञानत्वनैव वाक्यार्थज्ञानं निवेश्य तज्जन्यत्वसाधनं परिशेषानुमानहेतुसिद्ध्यर्थं मुचितमिति भ्रमात्मक वाक्यार्थज्ञानं पृथगंतर्भाव्या न्यतरजन्यत्वसाधनविरोधः; नच विशिष्ट ज्ञानपदं प्रकृतविशेष्य विशेषणोभय ज्ञानपरमित्यभिप्राच्यम्, तथासति परिशेषानुमाने तादृशज्ञानस्यैव प्रवेशनीयतया पयःकरणकत्वसमान कालीनसेकइत्यादि वाक्यस्यापि भ्रमात्मकतया सेकपयःकरणकत्वोभय विषयक तादृशवाक्यार्थ ज्ञानजन्यतया च तत्प्रयोक्तरि पुंसिहेतुसत्वेन पयःकरणकत्वविशिष्टसेकज्ञानरूपसाध्यस्यचासत्त्वेन व्यभिचारात्;- मैवं, प्रकृतविशेषणक भ्रमत्वघटकत्व प्रकृतविशेषण विशिष्टज्ञानत्वघटकत्वान्यतररूप वत्प्रकृतविशेष्यनिरूपित विषयिता प्रयोज्यत्वमेव भ्रमविशिष्टज्ञानान्यतरजन्यत्वं । भ्रमाद्यजन्यत्वं भ्रमत्व घटकविषयित्वाप्रयोज्यत्वं । वाक्यार्थज्ञानजन्यत्वञ्च स्वाबाधितप्रकृतविशेषणक साकांक्ष धर्मिनिरूपितत्वं, स्वधर्मिकप्रकृतविशेषणविषयक ज्ञानविषयतासाकांक्ष धर्मिनिरूपितत्वंवा, तावतापि पयसासिञ्चतीत्यादिवाक्य जनकस्य कूटलिंगकानुमितिस्थलीय सेकादिरूपधर्मि तद्धर्मपयःकरणकत्वादिविषयक ज्ञानद्वयस्यापि संग्रहः । तदसंग्रहे तज्जन्यवाक्यप्रयोक्तरि पयः करणकत्वविशिष्टसेकज्ञानरूप साध्यासत्वेन व्यभिचारात्तत्संग्रहआवश्यकः । प्रकृतविशेषण विशिष्टज्ञानत्व घटकत्वं च स्वविषयकज्ञानविषय प्रकृतविशेषण साकांक्ष धर्मिनिरूपितत्वं । अत्रापि स्वधर्मि । एतच्छरीरे सेकादिरूपधर्मिण स्सेकत्वादिना नप्रवेशः, अपितु सामान्यरूपेणैवेति एतदन्तर्गततया सेकत्वाद्यवच्छिन्ने पयःकरणकत्वादिविशिष्टज्ञानविषयत्व रूपविशेषणसंसर्गसाधकहेतुसिद्ध्या नपरिशेष

नुमानवैयर्थ्यं । भ्रमविषयताविशिष्ट ताद्दशविषयितयो ज्ञानभेदाभेदा वानिवेशय प्रकृतविशेषण साकांक्ष प्रकृतविशेष्यविषयितात्वेन निवेश सम्भवेपि भ्रमविषयित्वाप्रयोज्यत्वविशिष्टताद्दशविषयितात्व विशिष्टज्ञान विषयितात्वान्यतरवद्विषयिताप्रयोज्यत्वघटितहेतौ विशिष्टविषयिताघटित साध्यस्य सुग्रहव्याप्तिकतया न्यतरत्वेन विषयिताद्वयप्रवेशः । ताद्दश व्याप्ते स्सुग्रहत्वं चैकतररूपशून्यस्या न्यतररूपवत्त्वे परविशेषवत्त्व मावश्यकमिति ग्रहस्य झटितिसम्भवात् । वाक्यप्रयोजकज्ञाने प्रकृत विशेष्ये विशेषतः प्रकृतविशेषणसाकांक्षत्वाग्रहदशाया मनुमाननिर्वा हार्थ मप्यन्यतरवत्त्वेन विषयताद्वयनिवेशः । नच शुकादिवाक्ये प्रकृत विशेष्यान्तर्भावेणान्यविशेषणस्य प्रकृतविशेष्यानन्तर्भावेण प्रकृतविशेष णस्य वा प्रत्यायनेच्छया प्रयुक्ते च वाक्ये व्यभिचारवारणाय वाक्यत्वा दिति हेतौ वाक्यपदं प्रकृतविशेषणसाकांक्ष प्रकृतविशेष्यप्रत्यायनेच्छयो च्चरितवाक्यपरं तथाच हेतुप्रसिद्ध्यनुरोधेन प्रकृतविशेष्ये प्रकृतविशेषण साकांक्षताया विशेषताग्रह प्रकृतसाध्यकानुमाने प्यपेक्षितइति वाच्यम् , प्रकृतविशेषणसाकांक्षत्वेन प्रकृतविशेष्यं प्रतीतिविशेषणतया वगाहमाने च्छाया हेतुघटकतयाताद्दशेच्छात्वेनेच्छाभाने वगाहनांशएव साकांक्षत्वे नत्यन्ताधिभानात प्रकृतविशेष्ये साकांक्षताया हेतुग्रहेणा विषयीकरणात । विशेषणसाकांक्ष यद्विशेष्य तत्प्रतीतीच्छात्वेनेच्छाया हेतुघटकत्वे पयः करणकत्वानुपरक्तपयःकरणकसेकविषयिकाया स्सेकप्रतीति र्भवत्विती च्छाया अपि संग्रहेण ताद्दशेच्छाया सिंचतीत्यादिवाक्यप्रयोक्तरि पयःकरणकत्व विशिष्टसेकज्ञानशून्ये व्यभिचारस्य दुर्वारत्वात । अस्तुवा भ्रमविशिष्टज्ञानयोः प्रकृतविशेषणसाकांक्ष विशेष्यज्ञानत्वेनोपादानं, वि- शिष्टज्ञानपदमपि ताद्दशज्ञानपरमेव, भ्रमादिपद मतद्गुणसंविज्ञान बहु व्रीहिणाप्रमादादि त्रयपरमेवेति ।

अथ, प्रकृतवाक्य प्रयोजकसेकादिविषयतायां पयः करणकत्वा दिभ्रमत्वाघटकत्वनिश्चय मंतरेण पयसासिंचतीत्यादिवाक्ये तद्भ्रमत्वघट कविषयित्वाप्रयोज्यत्वस्य दुर्ग्रहतया परिशेषानुमानहेतुग्रहो नसम्भव तीति दर्शितानुगतरूपेण सेकादिरूपविशेष्यविषयितायां "भ्रमत्वा घटकत्वनिश्चयापेक्षित [ भ्रमनिरासोपि तन्निश्चय ] एव, तथा च परि

शेषानुमानं विनापि भ्रमत्वाघटकनिरुक्तसाध्य घटकानुगतरूपवद्विष यिताकत्वस्य सैकात्म्यग्रहेण तेनैवहेतुना पयःकरणकत्वादिसंसर्गसाधनं सम्भवतीति चेत? सत्यम् । तथापि यत्र निरुक्तविषयितायां भ्रम त्वाघटकत्व मगृहीत्वैव प्रकृतवाक्ये शब्दादिना भ्रमत्वघटकविषयित्वा प्रयोज्यत्वग्रह स्तत्र परिशेषानुमानस्योक्तविषयितायां भ्रमत्वाघटकत्व ज्ञानानपेक्षितया तत्स्थलाभिप्रायेण तदादरः । प्रकृतवाक्यार्थमज्ञा त्वापि प्रकृतवाक्य प्रयोजकविषयितात्वादिना वाक्यार्थविषयितायां भ्रम त्वाघटकत्वनिश्चयेन वाक्ये भ्रमत्वघटकविषयित्वाप्रयोज्यत्वनिश्चयसम्भ वेपि प्रकृतवाक्यार्थविषयितात्वेनैव भ्रमत्वाघटकत्वनिश्चयोपेक्षित इत्य भिमानेनापाततोऽस्मिन्वाक्यार्थ इत्यादिशंकनमिति तद्विरोधो किंचित्करः । अथवा स्वबाधितधर्म साकांक्षधर्मिज्ञानं भ्रमपदार्थः ।

अथ यत्रकूटलिंगक प्रमानुमित्युत्पादस्थानाभिषिक्ताबाधित धर्म धर्मिविषयक ज्ञानद्वया द्विशिष्टार्थकवाक्यप्रयोग स्तत्रवाक्ये उक्तान्यतर जन्यत्वाभावाद्व्यभिचारइतिचेन्न; - तत्रामिथस्साकांक्षधर्मधर्मिविषयक ज्ञानजनकव्याप्त्यादिभ्रमप्रयोज्यतयैव निरुक्त साध्यसत्वात । विशिष्ट ज्ञानपदंवा स्वाबाधितधर्मसाकांक्ष धर्मिविषयक ज्ञानपरं, तथात्वंच ज्ञाना तरविषयधर्मसाकांक्षधर्मि ज्ञानसाधारणमपीति सामञ्जस्यात्। तन्मते वर्णानां नित्यतयाजन्यपदं जन्यानुपूर्वीकार्थकंवाच्यम् । प्रतारणस्थलेपि विपरीतविशिष्टार्थ मप्रतीत्यापि वाक्यरचनया तत्र प्रकृतवाक्यार्थज्ञाना जन्यत्वा द्व्यभिचारइति प्रतारणाया आदिपदेन परिग्रहः । नच प्रतारणास्थले आहार्यवाक्यार्थ ज्ञानस्यावश्यकतया न व्यभिचारइति वाच्यम्, स्वप्रतीत विपरीतप्रत्यायनेच्छातो वाक्यार्थज्ञानंविनापि त द्विशेष्यक तत्प्रकारकज्ञानवाक्यार्थज्ञानं ज्ञात्वा तत्प्रतीतीच्छया वाक्य रचनासम्भवात । नचैवमप्रतारकस्यापि तादृशरीत्या वाक्यार्थज्ञानंविना वाक्यप्रयोगसम्भवां त्प्रतारणाया आदिपदेन ग्रहणेपि व्यभिचारोदुर्वार एवेति वाच्यम्, यतस्स्वप्रतीतविपरीतार्थप्रत्यायनेच्छा नात्र प्रतारण

ततो भ्रमादिनिरासेसति परिशेषाद्वाक्यार्थज्ञाना

---

पदेन विवक्षिता, अपितु स्वाप्रतीतार्थप्रत्यायनेच्छैव, एवं च वाक्यार्थ ज्ञानानधीन वाक्यार्थप्रत्यायनेच्छामात्रस्य साध्यघटकतया नोक्तस्थले व्यभिचारः। एवं प्रमादोप्यादिपदेन ग्राह्यः। प्रमादश्चानुपूर्व्यन्तर निर्वाहकमनवधानम्। यत्र घटोनास्तीति प्रतिपादनेच्छया, घटोनास्तीति वक्तव्ये नकारमनुच्चार्य घटोस्तीति प्रयोगः, प्रमादस्य तादृशसाध्या घटकत्वे तत्र घटासत्वरूपवाक्यार्थप्रतिपादनेच्छाधीन वाक्यत्वरूपलिं गमस्ति नतु तादृशवाक्यार्थ ज्ञानजन्यत्वं, भिन्नविषयकत्वादिति व्यभि चारस्स्यात्; अतस्तत्रसाध्यसत्वाय तदुपादानम्। करणापाटवमप्या दिपदग्राह्यम्। तत्र करणस्य कण्ठादिरूपवर्णस्थानस्या पाटवं एकव र्णस्थानस्या परवर्णस्थानत्व भ्रमविषयत्वम्। यत्रपटास्तित्व प्रतिपा दनेच्छया पटोस्तीति वर्णानामुच्चारणे कर्तव्ये कण्ठे ओष्ठ्यपकारस्थानत्व भ्रमेण तदुपादानकप्रयत्नात्तत्रचेष्टोत्पत्त्यातत्संयोगेन घकारोत्पत्तौ घटो स्तीतिवाक्य मुच्चारितं भवति तस्य भिन्नविषयकत्वेन न वक्तृवाक्यार्थ ज्ञानजन्यत्वमिति करणापाटवोपादानादेव तत्रसाध्यसत्वानिर्वाहः। साध्ये हेतौ च प्रकृतविशेष्य विशेषणयो र्यत्तत्पदेनोपादाय सामान्य व्याप्त्या दरान्मद्वाक्यवदिति दृष्टांतसंगतिः (भ्रमादिनिरासेसतीति) वक्तर्यनु मानादिना भ्रमादिरूपदोष चतुष्टयाभावनिर्णये सतीत्यर्थः। प्रकृतवा क्यार्थगोचर भ्रमाभावसिद्धिः प्रकृतवाक्यार्थ विषयितायांवा बाधित धर्मसाकांक्ष धर्मिविषयकत्वरूप भ्रमत्वस्य तादृशधर्मिनिरूपि तत्वस्य वा अभावसिद्धिपर्यवसितेति प्रागुक्तम्। तत्सिद्धिप्रयोजकं चायं वक्ता भ्रमत्वशून्यप्रकृतवाक्यार्थ ज्ञानकः, भ्रमत्वाघटकस्वज्ञानीयं प्रकृतवाक्यार्थ विषयिताकोवा निर्दोषलिंगादिना अभ्यासगृहीत प्रकृत वाक्यार्थत्वादित्यनुमानम्। एव मप्रतारकत्वं। एकविशेषाभाव सहकृत सामान्यघटिता परविशेषसाधकहेतु रेव परिशेषपदार्थः। तादृश

नुमानं – अयं वक्ता स्वप्रयुक्तवाक्यार्थे यथार्थ ज्ञानवान् ,

---

अयं वक्तेति वक्तृपक्षकानुमान हेतुरपि, तस्य भ्रमादिजन्यत्वाभाव सहित भ्रमाद्यन्यतरजन्यत्व रूपसामान्यानात्मकत्वेऽपि तद्घटितत्वात , वाक्यार्थ यथार्थज्ञान जन्यत्वरूपा परविशेषसाधकत्वविरहेऽपि वाक्य जनकत्वस्य साध्यतावच्छेदक कोटिप्रवेशेन तादृशविशेषण साधक त्वात । वाक्यार्थज्ञानित्यस्य यथार्थेत्यादिः । परिशेषानुमानं प्रयोगारूढ़ माह ( अयमिति ) ( स्वप्रयुक्तवाक्यार्थ यथार्थज्ञानवानिति ) स्वप्रयुक्तं यद्वाक्यं तदर्थगोचरयथार्थ ज्ञानवा नित्यर्थः । यथार्थज्ञानं च तन्मते विशिष्टज्ञानमेव । तदनिवेशे यथार्थज्ञानविषयत्वरूपपदार्थ पक्षकानु मानहेतुः पक्षे नसिद्ध्यतीति तन्निवेशः ।

अत्र सेकः पयः करणक इत्यादिज्ञानस्य तत्पुरुषप्रयुक्त वाक्यार्थ विषयकत्वेन पयसासिञ्चतीति वाक्यार्थविषयकत्वेन साध्यसिद्धावपि सेकत्वावच्छिन्ने पयःकरणकत्वादि संसर्गसाधक तद्विशिष्टज्ञान विषय त्वा[त्व]ज्ञानेतत्रतत्संसर्गसाधकवक्ष्यमाणानुमाना निर्वाहइतिसेकादिविषय क पयःकरणकत्व विशिष्टज्ञानत्वरूपेण साध्यत्वं विवक्षितम् । तेन रूपेण ज्ञानसिद्धौ च सेकत्वावच्छिन्ने तादृश विशिष्टज्ञान विषयत्वं ज्ञाननिष्ठ तद्विषयकत्व तन्निष्ठज्ञानविषययो स्तुल्यतया सिद्ध्यति । हेतुः भ्रमाद्यजन्य त्वविशेषित निरुक्तसेकादिविषयता प्रमादाद्यन्यतर प्रयोज्यवाक्यप्रयो क्तृत्वं, अतोन पयःकरणकत्वाविशिष्ट सेकज्ञानशून्ये भ्रमाद्यजन्या न्यार्थकवाक्यप्रयोक्तरि व्यभिचारः । यो भ्रमाद्यजन्य यद्विशेषणविशेष्य घटितान्यतर प्रयोज्य वाक्यप्रयोक्ता स तद्धर्मविशिष्ट तद्धर्मिविषय क ज्ञानवानिति सामान्यतोव्याप्तिः । अतएववाक्यार्थभ्रमजन्य वह्निनासि

भ्रमाद्यजन्यवाक्यप्रयोक्तृत्वात्, अहमिवेति ।
नत्वाप्तत्वात्, साध्याविशेषात् । ततएतेपदार्था
यथोचित संसर्गवन्तः,

---

चतीत्यादिवाक्यप्रयोक्तरि तादृशवाक्यार्थगोचर यथार्थ ज्ञाना प्रसिद्धया तद्घटित साध्यवत्त्वा निर्वाहेण प्रसक्तं व्यभिचारं वारयितुं ( भ्रमाद्यज न्येति) भ्रमाद्यजन्यत्वं पूर्वानिरुक्तार्थकम् । आदिपदा त्प्रतारणा प्रमादकर णा पाटवानां परिग्रहः । प्रतरणा जन्यान्यत्वोपादाना त्पूर्वोक्तरीत्या वाक्यार्थज्ञानं ज्ञात्वापिवंचनेच्छारूप प्रतारणया यद्वाक्य प्रयुज्यते तद्वाक्य स्य तद्वाक्यार्थज्ञानाजन्यत्वेपि तद्वाक्यार्थज्ञानप्रतारणान्यतर जन्यत्वसत्वा द्धेतु घटकविशेष्य दळसत्वा त्तत्प्रयोक्तरि तद्वाक्यार्थ ज्ञानाभावेपि न व्यभिचारः । एवं प्रमादकरणापाटवयो रुपादानात तदन्यतर जन्यत्वत्वावच्छिन्नमेव वाक्येसिद्धं, नतु तद्धर्मसाकांक्ष तद्धर्मज्ञानरूप वाक्यार्थ ज्ञानजन्यत्वत्वावच्छिन्नम्, तादृशज्ञानजन्यत्वस्य साध्यतानव च्छेदकत्वात । अतोवाक्यार्थज्ञानजन्यत्वमुपेक्ष्य वाक्यार्थज्ञानान्य तम जन्यत्वेनैव वाक्यं विशेषितम् । नचा सिद्धिमात्र वारकत्वेन प्रतार णादि विशेषणवैयर्थ्यम्, यथासन्निवेश अवैयर्थ्यात् ( अहमिवेति ) भ्रमाद्यजन्यघटमित्यादिवाक्यप्रयोक्ता वाक्यार्थगोचरयथार्थज्ञानवांश्च । अहमिवेत्यनंतरमिति पदं पूरणीयम् । तेनसहानुमानं चेति पूर्वोक्तं संबद्धयते ( नत्वाप्तत्वादिति ) हेतूकार्यमितिशेषः । ( साध्याविशेषा दिति ) प्रकृतवाक्यार्थ गोचरयथार्थज्ञानवत्त्वस्याप्तपदार्थत्वादितिभावः । भ्रमादिदोषशून्यत्व रूपाप्तत्वस्य हेतुत्वेच शुकादौ व्यभिचारः, तच्छू न्यत्वेसति प्रकृतवाक्यार्थ ज्ञानवत्वंत्वसिद्धम्, पूर्वानुमानस्य विशिष्यवि शेष्यासाधकत्वात, एवं सामान्यतो भ्रमाभावः पुरुषेऽसिद्धः, प्रकृतवा क्यार्थभ्रमश्चाप्रसिद्धइति न तच्छून्यत्वस्य हेतुप्रवेशसंभवः, भ्रम त्वाभाववत्प्रकृतवाक्यार्थ ज्ञानवत्वंच साध्यपर्यवसितमेवेतिभावः ( एते पदार्थाइति ) सेकादयइत्यर्थः ( यथोचितसंसर्गवन्तइति ) पयः करण

यथार्थज्ञान विषयत्वात्,

---

करत्वादि प्रतियोगिकतात्पर्यविषय संसर्गवंत इत्यर्थः । तात्पर्यविषयसंसर्गस्यापि न तत्त्वेन निवेशः, तेन रूपेण तस्य वाक्यार्थाघटकत्वात्, अपि तु तात्पर्यविषयतावच्छेदकाधाराधेयतात्वादिरूपेण । तस्तत संसर्गस्य संसर्गविधयैव वाक्यार्थ घटकतया तत्तत्संबंधेन प्रकृतविशेष्ये प्रकृत विशेषणमेव साध्यतयाविवक्षितं ( यथार्थज्ञानविषयत्वादिति ) तैत्तत्संबंधेन तत्तद्विशेषणकविशिष्ट बुद्धिविषयत्वादित्यर्थः । तत्तत्सम्बन्धेन तत्तद्विशेषणक ज्ञानत्वंच तत्तत्संबंधावच्छिन्न स्वनिरूपिताकांक्षा व तद्धर्मिविषयताकत्वम् । आकांक्षाच विशेषणनिष्ठा विशेष्यनिरूपिता विशेषणताख्याविषयतैव । साच तन्मते विशिष्टज्ञानाविषयेणापि संबंधेनावच्छिद्यते । तथाच तत्संबंधावच्छिन्न तद्धर्मनिष्ठविशेषणताख्य स्वविषयितानिरूपितज्ञानविषयत्व मत्र हेतुः । स्वंज्ञानम् । यत्संबंधावच्छिन्न यन्निष्ठविशेषणताख्य स्वविषयतानिरूपित ज्ञानविषयत्व यत्र तत्र तेनसंबंधेन तद्वृत्तित्वमिति सामान्यतोव्याप्तेः । तनयत्पदार्थस्य यादृशसंबंधः क्वचिदपि येनपुंसा नगृहीत स्तेनसंबन्धेन तद्धर्मविशिष्टज्ञानविषयत्वंवा तस्यापि प्रकृतविशेष्ये तदीयतादृशसंबन्धरूपवाक्यार्थ सिद्धिः ।[ संबंधविशेषावच्छिन्न स्वाकांक्षायानिवेशात् । साध्यहेत्वोरेक संबन्धनिवेशात् कालिकादिसंबन्धेन पयःकरणकत्वादिविशिष्टबुद्धि विशेष्यदाहादौ दैशिकस्वरूपादिसंबन्धेन पयःकरणकत्वादिविरहेपि न व्यभिचारः । विशेणतारूपाकांक्षायां तज्ज्ञानीयत्वनिवेशा त्तद्धर्म भ्रमविषये तत्संसर्गविरहेपि न व्यभिचारः । विशेषणतारूपाकांक्षा निवेशाद्विशेष्यसंबन्धाननुयोगिनि विशेषणे विशेष्यवत्त्वविरहेपि विशेष्यतारूपाकांक्षा निरूपितविशेणता रूपविषयत्व सत्वेपि न व्यभिचारः । वक्तृपक्षकानुमाना त्सेकादिविशेष्यकपयः करणकत्वादि प्रकारकयथार्थ ज्ञानसिद्धावपि सेकादौ तादृशज्ञानविशेष्यत्वरूपहेतु र्न

आप्तोक्त पदस्मारितत्वाद्वा, मदुक्त पदार्थवदिति ।

ननु – वक्तु र्ज्ञानविशेषोनुमेयः, ज्ञाने

---

सिद्धः, अनुमाने तुल्यवित्तिवेद्यतायां मानाभावादतोहेत्वंतरमाह ( आप्तोक्तेति ) स्व विशेष्यक तत्संबन्धक तद्विशेषणक ज्ञानविशेष्यत्वा सिद्धावपि सेकादिविशेष्यकविशिष्टज्ञानसिद्धौ तत्रतस्यसुग्रहत्वान्नासिद्धि रितिभावः ( मदुक्तपदार्थवदिति ) स्वविशेष्यकघटादि विशिष्टज्ञानवता मया प्रयुक्तपदेन स्मारितं घटादिसंसर्गवत कर्मत्वादिकमिवेत्यर्थः । मदुक्तत्वकथनं आप्तोक्तत्वगर्भहेत्वभिप्रायेण । "इती" त्यनंतरमनुमेयमिति पूरणीयम् । तेनैव समं तदनंतरमित्यर्थकं ", तत " इति पूर्वोक्तं संबद्ध्यते ।

अथ वक्तृज्ञानानुमाने प्रकृतवाक्यार्थज्ञानमेव साध्यमुपगंतव्यम्, तस्य च वाक्यांतरार्थ ज्ञानसाधारणरूपेण साध्यत्वे तेनैव रूपेण तस्य प्रकृतवाक्यार्थसाधकहेतौ प्रवेश्यतया दाहादावपि हेतुसत्वेन तत्रपयः करणकत्वादि संसर्गवत्त्वासत्वेन व्यभिचारस्स्यादित्यर्थान्तर ज्ञान व्यावृत्तरूपेण तस्य साध्यता स्वीकार्या, तच्चरूपं प्रकृतवाक्यार्थविषयकत्वमेव, तस्य च वक्तृज्ञानानुमितेः पूर्वं दुर्ज्ञेयतया न व्याप्ति ग्रहसंभवः; नच विशेष्यमनन्तर्भाव्य तत्तद्विशेषण विशिष्टज्ञानत्वेनैव साध्यतास्वीकरणीया, तथाच न साध्यस्य वाक्यार्थ घटितत्वमिति वाच्यं, तथासति वाक्यार्थ " साधकानुमानपक्षसेकादिरूप विशेष्यादौ पयःकरणकत्वादि विशिष्टज्ञानविषयत्वादिरूपहेत्वसिद्ध्या व कयार्थसाधकानुमानानवतारा दित्येतत्सामान्यव्याप्त्या अप्रसिद्धसाध्य सिद्धिर्नविचारसहा, एकव्याप्तेः साध्यान्तरसाधकत्वेऽति प्रसंगादित्य शयेनशंकते ( नन्विति ) ( वक्तुर्ज्ञानविशेषइति ) वाक्यान्तरार्थ ज्ञानव्या

चार्थएवविशेषः,. नत्वर्थाधीनोन्यः, " अर्थैनैव विशेष " इत्यौपचारिकी तृतीया,

---

वृत्तरूपावच्छिन्न मुक्तज्ञानमित्यर्थः । " अर्थएव " - अर्थविशेषविषयकत्वमेव । " विशेषः " - अर्थान्तरज्ञानव्यावर्तकरूपम् । " अर्थाधीनोन्यः " - अर्थाधीनपदार्थान्तरम् । मानाभावादितिशेषः ।

नन्वेवं " अर्थैनैवविशेषोहि निराकारतयाधिया " मित्याचार्यकारिकायां विशेषस्य व्यावर्तकरूपस्य हेतुतृतीयया र्थाधीनत्व कथनविरोधइत्यतआह ( अर्थैनैवेति ) " औपचारिकी "- अभेदलाक्षणिकी । तथाच ' धियां '- बुद्धीनां, ' विशेषः ' - अर्थान्तरज्ञानव्यावर्तकरूपं, ' अर्थैनैव ',- अर्थादर्थविषयकत्वाद्वा अभिन्नएव, नतु तद्भिन्नः । साकारवादिमते विषय विषयिभाव नियामकतया घटादिज्ञानस्य स्वात्मक घटादिविषयकतया विषयभेदवत्वे घटत्वपटादिरेवभेदकः, नतु ज्ञानातिरिक्तो विषयस्तद्भेदकः, बाह्यार्थस्या लीकत्वादिति तन्मतेर्थस्यैव भेदकत्वमनुपपन्नं, अतस्तन्मतं प्रतिक्षिपति (निराकारतयेति ). बाह्यार्थभंगे कदाचिद्घटाकारं कदाचित्पटाकारं ज्ञानमित्यत्र विषयेंद्रिय सन्निकर्षादेर्नियामकत्वासभवा द्बाह्यार्थस्य प्रामाणिकत्वे मानाभावे च ज्ञानस्य घटपटादिस्वरूपतात्मक तत्तदाकारताविरहेणेत्यर्थः । [ इतिकारिकाव्याख्या । ]

ननु सुब्विभक्ते रानुशासनिकातिरिक्ते ऽर्थे लक्षणया साधुत्वे कर्तृत्वाद्यर्थे षष्ठयादिविभक्ते रनुशासनमफलम् , अनुशासनं विनापि तृतीयाया अभेदार्थकत्वइव कर्तृत्वाद्यर्थे षष्ठ्यादे र्लक्षणया साधुत्वसंभवात्; " सुपां सुलुगि " त्यादिसूत्रे व्यत्ययानुशासन मप्यफलं, तत्फलंच्छान्दसेत्वादिना देशिनोमादे रुपस्थापने कर्मत्वादिबोधोपपादनम् , सुब्विभक्तौ लक्षणास्वीकारेच्चा मादनुपस्थापनेपि त्वादिना

तथाच वाक्यार्थज्ञानविशेषो ऽनुमेयः, तस्य चाप्रसिद्धत्वान्नव्याप्तिग्रहः, अतएवास्मिन्वाक्यार्थे ऽयमभ्रांत आप्तोवेति ज्ञातुमशक्यमिति शब्दएव तमर्थं बोधयेदितिचेन्नः—तात्पर्यावधारणार्थं त्वयाप्य

---

लक्षणया कर्मत्वादिबोधनसंभवइति, एव मनुशासनं विनापि विभक्ते रर्थान्तरसाधुत्वे "द्व्येकयोर्द्विवचनैकवचने" इत्यनुशासनमप्यफलं, एकं एकत्वं वक्तीत्यन्वर्थैकवचनसंज्ञासामर्थ्या देवैकवचनादे रेकत्वाद्यर्थकतालाभात ।

अत्रकेचित उक्तानुशासनसार्थक्यायैक विभक्ते रपरविभक्त्यर्थ लक्षणानभ्युपगमा द्भेदस्य विभक्त्यंतरार्थत्वविरहेण तत्रतृतीयालक्षणायां सुब्विकर्तौ न लक्षणेति प्रवादाविरोध इत्याहुः ।

मिश्रास्तु विशेष इतरव्यावृत्तिः, अर्थस्येतरभेदानुमितौ लिंगत्वेपि लिंगज्ञानस्यैवानुमितिजनकतया धर्मपदमप्यर्थज्ञानलाक्षणिकमित्यौपचारिक पदयोगा त्तृतीयाया औपचारिकत्वमिति व्याचक्रुः ।

(वाक्यार्थज्ञानविशेषइति) प्रकृतवाक्यार्थविशेषितं ज्ञानमित्यर्थः। "तस्य" - तादृशज्ञानस्य । "अप्रसिद्ध्या" - वाक्यार्थाग्रहेण तत्तद्ज्ञानानुमापकज्ञानेन । "अतएव" - वाक्यार्थस्य पूर्वमग्रहादेव (आप्तइति) प्रतारणा रूपदोषरहितइत्यर्थः (इति ज्ञातुमशक्यमिति) सर्वत्रार्थे भ्रांतत्वस्याप्तत्वस्यवा कुत्रापि पुंस्यसत्त्वेन प्रकृतवाक्यार्थ मंत्र भ्रान्त्य स्वीकरणीय मीदृशज्ञानमशक्यमित्यर्थः (शब्दएवेति) एवकारेण वक्तृज्ञानानुमिति व्यवच्छेदः । एवं च शब्दस्य नानुवादकत्व मित्याशयः (तात्पर्यावधारणार्थमिति) उक्तयुक्तिभि स्तात्पर्यज्ञानस्य हेतुताया

शाब्द्याएव संसर्गविशेषप्रतीते रवश्याभ्युपेयत्वात् । अन्यथा क्व तात्पर्यनिरूपणं । अतएवाप्तोक्तत्व भ्रमाद्यजन्यत्व निरूपणमपि सुकरं । शाब्दं तु संसर्ग ज्ञानं प्रथमं नभवति, ज्ञानांतरं तु भवत्येव । नचैवं

---

स्तवा प्यावश्यकत्वादिति भावः । "संसर्गविशेषप्रतीतेः" - प्रकृत वाक्यार्थप्रतीतेः (अवश्याभ्युपेयत्वादिति) तथाच तदर्थं वक्तृवाक्यार्थ ज्ञानानुमानस्य भवतापि स्वीकरणीयतया तदुपायानुसरणं द्वयो रेवा वश्यकमिति भावः । "अन्यथा" - शाब्दबोधा त्पूर्व मशाब्दवा- क्यार्थप्रतीत्यनभ्युपगमे (क्वतात्पर्यनिरूपणमिति) वाक्यार्थविशेषोपरक्त तात्पर्यज्ञानासम्भव इत्यर्थः । "अत एव" - अशाब्दवाक्यार्थज्ञानस्य प्रागभ्युपेयत्वा देव (आप्तोक्तत्वेति) वाक्य इत्यादिः । "निरू पणं" - निर्णयः (सुकरमिति) वक्तरि प्रकृतवाक्यार्थभ्रमादिनिरास सम्भवादिति भावः । अयं चाभ्युपगमवादः, वाक्यार्थ मज्ञात्वापि स्वयं भ्रमस्वाभाववत्प्रकृतविशेष्यसाकांक्ष प्रकृतविशेषणज्ञानक' इत्यादि रीत्या वक्तरि प्रकृतवाक्यार्थभ्रमादिनिराससम्भवेन परिशेषानुमान निर्वाहात् । अन्यथा परिशेषानुमानानन्तर मेव संसर्गानुमानी त्परि शेषानुमान निर्वाहकभ्रमादिनिरासे संसर्गानुमानापेक्षया न्योन्याश्रया पातात । ननु वाक्यार्थज्ञाने तात्पर्यधियो हेतुतया तात्पर्यज्ञान मपेक्षणीयं, वाक्यार्थज्ञानं च प्रथमतः कथं भवे दित्याशंकां निराक- रोति (शाब्दमिति) "प्रथमं" - तात्पर्यज्ञाना त्पूर्वम् । "न भवति" तत्रैव तात्पर्यज्ञानस्य हेतुत्वादिति भावः । "ज्ञानान्तरं" - आनु मानिकसंसर्गज्ञानं (भवत्येवेति) तत्र तात्पर्यज्ञानाहेतुत्वादिति भावः (नचैवमिति) " एवं " - शाब्दा त्पूर्वं तात्पर्यज्ञानानुरोधेना

शब्दोनप्रमाणं, तदर्थस्य प्रागेवासिद्धेरितिवाच्यं; तत्रापि तुल्यत्वात् । ननु तथापि कथमर्थविशेष सिद्धिः, विशेषेणव्याप्त्यग्रहादिति चेन्न;—यथायो यत्र प्रवर्तते सतज्जानातीति सामान्यतो व्याप्ति ज्ञाने पाकादौ प्रवृत्तिदर्शना त्पाकविषयककार्य

---

शाब्दवाक्यार्थधीस्वीकारे ( नप्रमाणमिति ) अननुभावक मित्यर्थः । भवेदिति शेषः ( प्रागेव सिद्धे रिति ) प्रागेवानुमानतः प्रवृत्त्यादि क्षमज्ञाननिष्पत्ते रित्यर्थः ( तत्रापीति ) तात्पर्यज्ञानहेतुताया अनप वादादितिभावः । ननूपायाभावेन प्रकृतवाक्यार्थो सिद्धौ तात्पर्यस्य दुरवधारणतया तज्ज्ञानहेतुताया बाधकग्रस्तत्वेन युक्तिसहस्रेणापि तत्साधनमशक्यमिति तदहेतुत्वे दर्शितानुपपत्तयोन्य थैव समाधेया इत्याशयेन पृच्छति ( नन्विति ) (तथापीति ) तात्पर्यज्ञाने नियमतो वाक्यार्थज्ञानापेक्षणेपीत्यर्थः । "अर्थविशेषसिद्धिः"- विशिष्ट प्रकृतवाक्यार्थसिद्धिः ( विशेषेण व्याप्त्यग्रहादिति ) प्रकृतवाक्या ज्ञानस्य प्रागसिद्ध्या विशेषरूपेण तद्व्याप्त्यग्रहा त्पारिशेषानुमानासं वा त्संसर्गानुमानाप्रवृत्तेरित्यर्थः । साध्यहेत्वो रेकपदार्थघटितत्वं प्रकृतहेतुसाध्यसजातीयहेत्वंतर साध्यांतरयो र्व्याप्तिग्रहादपि प्रकृतहेतो पक्षधर्मता ज्ञाना त्पक्षे प्रकृतसाध्यस्या प्रसिद्धस्यापि सिद्धिः, अन्यथ पाकादिविषयककार्यताज्ञानाद् विशेषतोऽज्ञानेपि स्तन्यपानादिकार्यता ज्ञा तद्गोचर प्रवृत्त्यो र्व्याप्तिग्रहात्प्रयोज्यवृद्धादौ पाकादिकार्यताज्ञान देरसिद्ध्यनुपपत्तेः व्युत्पत्त्याधानिर्वाहादिति समाधत्ते ( यथायइति ( जानातीति ) कार्यतयेत्यादिः । सामान्यतो व्याप्तिग्रहापेक्षा च प्र कृतहेतुजातीये क्वचि त्साध्यजातीयव्यभिचारग्रहे सामान्यव्याप्त्यानुमि त्युदयात । नच पाकरूपपक्षे प्रवृत्तिविषयत्वरूपहेतुना कार्यताज्ञा विषयत्वसाधनेनैव पाकविषयक कार्यता ज्ञानासिद्ध्या न्यदीयव्या

ता ज्ञानानुमानं, यथाच चेष्टाविशेषदर्शना द्दश संख्याभिप्रायमात्रज्ञाने घटे तच्चेष्टादर्शनाद्घटे दशत्व ज्ञानं, तथा सामान्यतो व्याप्त्यात्रापि विशेषसिद्धिः ।

---

न्यासिद्ध्यौपयिकत्व मप्रामाणिकमितिवाच्यं, तावता प्रवृत्तपुरुषीय पाककार्यताज्ञानसिद्ध्यानिर्वाहा त्पुरुषे कार्यता ज्ञानसंशयानिवृत्तेः, तत्पुरुषीय तत्कालीनकार्यता ज्ञानएव प्रयोज्यवृद्धवाक्यान्वय व्यतिरेकानुविधानग्रहेण शब्दस्यानुभावकतासिद्धे स्तादृशकार्यता ज्ञान सिद्धेरावश्यकत्वाच्च । मिश्रास्तु एतदनुशयस्यैव स्थलांतरानु सरण बीजत्वमाहुः' (चेष्टाविशेषेति) यदीय संख्याविशेष प्रत्यायनेच्छा धीनं यद्दशांगुल्युत्क्षे पणं त त्तदीयसंख्याविशेषाभिप्रायपूर्वक मिति सहचारदर्शनं घटादिक मनंतर्भाव्य यत्रजातं, तत्र कतिघटास्संतीति प्रश्नानंतरं दशांगुल्युत्क्षेपणं दृष्ट्वा घटविषयक घटीयदशत्व संख्याभि प्रायं ज्ञात्वा घटं तादृशाभिप्रायपूर्वकत्वयो र्व्याप्त्यादिविषयत्वेन दशत्वसंख्यामनुमिनोति, तत्रघटीयदशत्व संख्याभिप्रायपूर्वकमिति सा मान्यव्याप्त्या तादृशचेष्टादर्शना द्दशत्वसंख्याभिप्रायस्य सामान्यतएव ग्रहसंभवेपि सामान्यतोव्याप्त्यैव घटदशसंख्याभि प्रायविषयत्व ज्ञानमि त्यर्थः । नच तत्रघटं पक्षीकृत्य दशांगुल्युत्क्षेपण प्रयोजकसंख्यावि शेष प्रत्यायनेच्छाविषयत्वेन हेतुना दशसंख्याभि प्रायविषयत्वस्य ताद्रूप्येण व्याप्त्यैव संभवादुद्देश्यसिद्धिः, अतएवमिश्राणा ·मुक्तानुशये न यथावेत्यादि फक्किकावतारणमयुक्तमितिवाच्यम् , यत्रोक्तहेतावुक्त साध्यस्य ताद्रूप्येण सहचारज्ञानं नास्ति एवं यत्रद्व्यादिसंख्याभि प्रायविषयघटादावेव द्व्यादि संख्याभिप्रायक द्व्याद्व्यंगुल्युत्क्षेपणं दृष्ट्वा यदीय प्रतीतीच्छाधीनं यत्संख्यांगुल्युत्क्षेपणं तत्तद्विषयक तत्संख्या

यद्वा—इदं वाक्यं साकांक्षै तदर्थविषय कैकज्ञानहेतुकं, आप्तोक्तत्वे सत्ये तदर्थप्रतिपादकत्वात, महावाक्यवत् ;

---

भिप्रायपूर्वकमिति सामान्यतोऽप्यभिगृहीता तत्रापि घटेदशांगुळ्युत्क्षेपण दर्शना तदीयदृशत्वज्ञानस्यानुमापकतया त्वदीय व्याप्तयान्यसाध्यसिद्ध्युपगमस्यावश्यकत्वात ।

[ ... वाक्यार्थज्ञानस्य संसर्गानुमानमपेक्षितं तत्र विशेष्य तत्तद्विशेषण विशिष्टज्ञानविषयत्व सिद्ध्यैवनिर्वाहात । अतोऽत्र जन्यान्यतरवाक्य प्रयोक्तृत्व हेतुकवक्तृपक्षकानुमान मयुक्तमित्याशयेन ※ वाक्यपक्षकवाक्यार्थज्ञान साध्यकानुमानमाह ( यद्वेति ) ( साकांक्षेति ) संकादिविषयकं यत्संकादिसाकांक्षं पयः कारणत्वादिविषयकज्ञानं तद्धेतुक मित्यर्थः ( आप्तोक्तत्वे सतीति ) भ्रमादिजन्यत्व मेवात्राप्तत्वं, तथा च भ्रमाद्यजन्यत्वे सतीत्यर्थः । वेदस्थळ वाक्यार्थस्य प्रमाणान्तरानवधार्यतया विलक्षणसामग्र्या आवश्यकत्वा लौकिकवाक्यजन्यविलक्षणानुभवोपि सामग्री बळात्सिद्ध्यत्येव । समाधान मतादृश प्रतीतिजनकत्व※शुकादिवाक्यस्यापि तादृश प्रतीति ※ तादृशानुमाने च भ्रमादिनिरास एवापेक्षितः । ननु प्राथमिकान्यत्वसाधकानुमान मपि, तत्साध्यस्यात्र हेत्वघटकत्वात । उक्तप्रतीतिफलयोग्यतत्वं च विशिष्टवाक्यार्थ मज्ञात्वापि प्रकरणादिना सुग्रहम । प्रथमानुमानेपि शुकादिवाक्ये व्यभिचारवारणाय तत्प्रवेशने · हेतुत्वा ※ द्वहस्यापेक्षिततया तस्यावश्यापेयत्वात । सामान्यव्याप्ति रत्रविवक्षितत्वान्महावाक्यव दिति दृष्टान्तसंगतिः ।

---

※ एतच्चिह्नयुक्ते कुण्डलितग्रन्थभागे तत्र तत्र पातो स्ति । अत एवासन्निनः प्रतिभाति ।

ततएते पदार्थाः परस्पर संसर्गवंतः, साकांक्षत्वे सत्येकज्ञानविषयत्वात् , सत्यरजतज्ञानविषयवदिति । एवं वक्तु र्यथार्थ वाक्यार्थज्ञानेनुमिते प्रकरणादिना वक्त्रभिप्रेत यथार्थप्रतीतिपरत्वज्ञानं, ततो वेदतुल्यतया शब्दा दर्थप्रत्यय इत्यनुवादकश्शब्दः; वक्तृज्ञानावच्छेदकतया तद [संसर्गज्ञाना] नुमाना त्तदुपजीवि संसर्गानुमानाद्वा वाक्यार्थस्य प्रागेवसिद्धेः ।

---

तदर्थश्च भ्रमाद्यजन्य कर्मत्वादि साकांक्षबद्धवादिप्रतीतीच्छया उच्चरितत्व वत् कर्मत्वादौ घटादिविशिष्टज्ञानजनकं मदीयं घटमित्यादिवाक्य मिवेति । एतदनन्तरं इत्येवानुमेय मिति पूरणीयम् । " ततः " इत्यस्य एवमित्यस्य पूर्वं पूरणीया नुमानमित्यनेन सम्बन्धः । " एतेपदार्था " इत्यादिकं पूर्व वद्व्याख्येयम् ।

( सत्यरजतज्ञानविषयवदिति ) रजतत्वविशिष्ट ज्ञानविषयरजतत्वसंसर्गि धर्मिवदित्यर्थः । शब्दस्यानुवादकत्व मुपसंहरति ( एव मिति ) ( वेदतुल्यतयेति ) वेदस्थले कल्पकसामग्रीसमवहिततयेत्यर्थः । ( तदनुमानादिति ) वक्तृज्ञानानुमाने साध्यतावच्छेदकतयेशेषः । " सिद्धे " रित्यग्रिमेणान्वयः । एत याथार्थ्यघटितसाध्याभिप्रायेणोक्तम् । याथार्थ्यस्य प्रकृतविशेषणवद्विशेष्यकत्वं रूपतया वाक्यार्थस्य तत्र प्रवेशात् । तदनुमाने विशिष्टज्ञानत्वेन साध्यत्वेतु न तस्सिद्धिरित्याशयेनाह ( तदुपजीवीति ) नचेत्यादिना अभिहितादित्यादिः ( सिद्धेरिति ) यथार्थ तज्ज्ञानानुरोधेन नियमतस्स्वीकार्यत्वादितिशेषः । भ्रमाद्यभावानुमानानन्तरं वक्तृज्ञानान्तरमभ्युपगम्यैव

यत्तु तत्संसर्गाग्रहो भ्रमः, तदभावश्च संसर्गग्रहएवेति भ्रमाभावेनुमीयमाने संसर्गज्ञानमेवानुमितमित्याप्तत्वानुमानांतर्गतमेव वक्तृज्ञानानुमानं, नतु वक्तृज्ञानानुमाने तल्लिङ्गमिति; तन्न, भ्रमोऽहिज्ञानद्वयमगृहीतभेदं, तदभावश्च गृहीतभेदज्ञानं । नहि ज्ञानाभावे सुषुप्तौ भ्रमव्यवहारः । ततो भ्रमाभावनिश्चयानंतरं वक्तृज्ञानानुमानं ।

---

निर्वाहयतोमतमुपन्यस्यति ( यत्त्विति ) यत्तु तत्संसर्गाग्रहो भ्रमइति पाठः । संसर्गग्रहाभावो भ्रमइत्यर्थः । भ्रमस्य विशिष्टज्ञानानात्मकतया भ्रमस्थाने संसर्गाग्रहस्यावश्यकतया स एव भ्रम इत्यभिमानः । " यत्त्वसंसर्गाग्रहोभ्रम " इति क्वाचित्कः पाठः । तत्र यथाश्रुते असंसर्गग्रहाभावस्य संसर्गग्रहानात्मकतया तदभावस्संसर्गग्रहएवेत्यसंगतम् , अतो भ्रमपदात्पूर्वं मकारप्रश्लेषेणासंसर्गग्रहाभावः, अभ्रमः-भ्रमाभावः, तदभावः तदात्मकोभावः . असंसर्गग्रहएवेत्यर्थः ( आप्तत्वानुमानान्तर्गतमेवेति ) अभ्रान्तत्वानुमानात्मकमेवेत्यर्थः । " वक्तृज्ञानानुमानम् "-वक्तृसंसर्गज्ञानानुमानं ( ज्ञानद्वयमगृहीतभेदमिति ) असंसर्गाग्रहविशिष्ट धर्मधर्मिविषयक ज्ञानद्वयमित्यर्थः ( तदभावश्चेति ) विशेष्यभूतज्ञानद्वयकालीन स्तादृशविशिष्टाभावश्चेत्यर्थः ( गृहीतभेदं ज्ञानमिति ) धर्मिणिधर्माभावविषयक ज्ञानरूपज्ञानं, नतु तयो स्संसर्गाग्रह इतिशेषः । संसर्गाग्रहएव कथं भ्रम इत्या शाकांक्षायामाह ( नहीति ) यतः सुषुप्तौ ज्ञानसामान्याभावसत्त्वेन संसर्गज्ञानाभावसत्त्वेपि, नपुंसि भ्रान्तत्व व्यवहार इत्यर्थः ( वक्तृज्ञानानुमानमिति ) आवश्यकमितिशेषः । आप्तत्वानुमानस्य वक्तृसंसर्गज्ञानानुमानत्वोपगमे प्रथमानुमा

किञ्च यद्याप्तोक्तत्वानुमानमेव वक्तृज्ञानानुमानं, तर्हि यादृशं लिङ्गं तादृशमेव गमकमस्त्विति ॥

इति चिन्तामणौ शब्दखण्डे शब्दप्रामाण्यवाद पूर्वपक्षः ।

---

नं वक्तृज्ञानानुमानाधीन पदार्थज्ञानानुमानंच, व्यर्थमित्याह ( किंचेति ) लिंगज्ञान यथार्थज्ञानानुमापकमितिशेषः । " तादृशमेव "- तज्ज्ञानमेवेत्यर्थः । " गमकमस्तु " - शाब्दप्रमाजनकमस्तु । तन्मते यथार्थज्ञान तात्पर्यस्यैववक्तृयथार्थज्ञानानुमापकत्वादितिभावः ।

अत्रभ्रमाद्यभाव सहितभ्रमादिविशिष्ट ज्ञानान्यतरजन्य वाक्यप्रयोक्तृत्वरूपहेतुज्ञानस्य यथार्थज्ञानानुमापकतया गौरवेणतस्य शाब्दप्रमित्य हेतुतया यथार्थतात्पर्यज्ञानस्यैव च हेतुतया प्रागवृत्तित्वेन तन्निर्वाहाय संसर्गानुमानस्य वक्तृज्ञानानुमानस्यावश्यकतया उक्तहेतुघटकविशेष्य भागसिद्ध्यर्थं प्रथमानुमानस्य तथात्वमितिभाव ।

केचित्तु-अभ्युपेत्य भ्रमाभावानुमानस्य वक्तृज्ञानानुमानत्वं भ्रमाभावानुमानानंतरं वक्तृज्ञानानुमानं कर्तव्यमेवेत्याशङ्क्यनिमाह ( किञ्चेत्यादि ) (यादृशंलिंगमिति ) वक्तृयथार्थज्ञानानुमापक लिंगघटकं यत भ्रमशून्यत्वमित्यर्थः । इति व्याचक्षते । (?)

इतिमूलगादाधर्यां शब्दप्रामाण्यवादपूर्वपक्षरहस्यम्

---

(?) अस्मत्संगृहीतेषु त्रिष्वपि गदाधरीय पुस्तकेष्वेतावानेव गदाधरीय ग्रंथउपलभ्यते । " अत्रोच्यते " इत्यादि मणिग्रंथव्याख्यानभागः पुस्तकत्रयेपि नास्ति ।

"तदवगम संसर्गानुमापकमस्तु । 'यथार्थधीपरत्व' - यथार्थवाक्यार्थप्रतीत्या च्छयोच्चारितत्वरूपं यथार्थतात्पर्यम् । 'न ज्ञातं प्रयोजकं, - न शाब्दप्रयोजकज्ञानविषयः । एतज्ज्ञानत्वेन न तद्धेतुत्वमितियावत (गौरवादिति)"

इत्येतावान् ग्रंथः परं सिद्धान्तभागव्याख्यानरूपः पुस्तकेष्वस्ति । एतदुपरिचाकांक्षा ग्रंथव्याख्यानमस्ति । मन्यामहे च वयं यत्रकुत्रचिदुपरितनग्रंथोपि स्यादेवेति । येषांनिकटे स भागोस्ति तैः प्रेषणीयस्स भाग इत्यर्थयामहे । लब्धे च ग्रंथशेषे खण्डान्तरे तंभागं प्रकाशयिष्यामः । अन्यथाचाकांक्षाग्रंथमेव मुद्रयिष्यामः । इति (संपादकः)

श्रीः ।

शास्त्रमुक्तावळी — ४

# ॥ प्रामाण्यवादः ॥

**महामहोपाध्याय श्रीगदाधरभट्टाचार्य विरचितः ।**

गंगेशोपाध्यायविरचितेन

**तत्वचिन्तामणिना**

तार्किकशिरोमणि श्रीरघुनाथसूरिविरचितया

**दीधित्याच सह**

श्री काञ्ची प्रतिवादिभयंकर अनन्ताचार्येण' परिशोधितः

श्री सुदर्शनमुद्राक्षरशालायां

॥ अ मु द्य त ॥

**प्रथमसंपुटः—ज्ञप्तिवादान्तः ।**

**॥ श्रीकांची ॥**

इदानी मेतन्मूल्यम् — २ - ८ - ०

१९०१

श्रीः ।

# प्रामाण्यवादभूमिका ।

ग्रन्थस्या स्य रचयिता महामहोपाध्याय श्रीमान गदाधरभट्टाचार्यः कदेमं भुवो भाग मलंचकारेति नास्माभि रेतावतापि निरचायि कालेन । अस्य मातापितरावपि किन्नामधेयाविति न वयं जानीमः । वंगदेशान्तर्गतो नवद्वीप एवा स्य जन्मभूमि र्निवासस्थानं चेति तु प्रायो जनानां प्रवादः । श्रूणमश्च वय मेत त्कुलसंजाताः केचने दानीमपि नवद्वीप मलंकुर्वन्तीति । एतदीयजीवनचरिताद्यवजिगमिषयाच वारद्वय मनुयुक्तो प्यस्मत्प्रियसुहृत श्रीमान् सर्वेश्वरसार्वभौमभट्टाचार्यो नैवात्र कमपिवांशं विलिखितुं समर्थोभवदित्यत्र किंवा निदानमिति न वयं जानीमः । भट्टाचार्य श्चायं न्यायसुधाम्बुधिमन्दरमना बहून् ग्रन्था न्निबबन्ध न्याय मधि शास्त्रम् । येषु श्रीमद्गंगेशोपाध्यायविरचित तत्वचिन्तामणिव्याख्याया श्रीमद्रघुनाथशिरोमणिभट्टाचार्यविरचिताया दीधिते र्व्याख्यान मप्यन्तर्भवति । श्रीमद्गंगेशोपाध्यायाविरचित स्तत्वचिन्तामणिश्च प्रत्यक्षानुमानोपमान शब्दाख्यखण्डचतुष्टयात्मकइति तद्व्याख्यारूपा श्रीरघुनाथशिरोमणिविरचिता शिरोमण्यपरनामधेया दीधितिरपि खण्डचतुष्टयात्मिकैव । खण्डचतुष्टयात्मिका दीधितिस्तु कार्त्स्न्येन व्याख्यायि नवा भट्टाचार्येणे त्यत्र तु वरीवर्ति विवाद स्सुमहान् । अनुमानखण्डव्याख्यानस्य संगत्यनुमित्यादिबाधान्तग्रन्थस्य प्रायः पठनपाठनादिषु बहुळप्रचारतया नास्ति तत्र विवादः । प्रत्यक्षखण्डेऽपि प्रामाण्यवादभागव्याख्यानस्य जागरूकतया कार्त्स्न्येन व्याख्यायि नवा प्रत्यक्षखण्ड इत्यत्रैव विवादपर्यवसानम् । चिन्तामणौ मंगळवादारम्भ एव मंगळश्लोकादिकरणा द्दीधितौच प्रामाण्यवादारम्भ एवं तद्दर्शनाच्च प्रामाण्यवाद प्रभृतिग्रन्थ एव व्याख्यायि रघुनाथशिरोमणिना तत्वचिन्तामणि-

रिति निश्चित्य गदाधरीयमपि प्रामाण्यवादादिमेव निश्चिन्वन्ति बहवः। प्रामाण्यवादोत्तरमनोऽणुत्ववादादीनां दीधितिगदाधरीये नाद्याप्यस्माभि रुपलब्धे। परं किं वदन्ती किल काचि त्तदस्तित्वविषयिणी कर्णपथ मवतरतीति, नात्र किमपि निश्चेतुं शक्नुमः। उपमानखण्डस्यतु नाद्यावधि कुत्रापि गदाधरीय मुपलब्धम्। शब्दगदाधरीय न्तूपलभ्यते क्वचि त्क्वचित्। एवञ्च सत्युपमानखण्डस्य परमव्याख्यानवादो न युक्तिसह इति तस्यापि व्याख्यानसद्भावपक्षमेव बहुमन्यामहे। तदेवं दीधितिव्याख्यानं खण्डचतुष्टयात्मकं गदाधरप्रणीतेषु ग्रन्थेषु मुख्यतमं। एतदन्येच स्वतन्त्रग्रन्थाः व्युत्पत्तिवाद शक्तिवाद विधिवादादय श्चतुष्षष्टिसंख्या श्श्रुतचरा स्तेषु केचि दृष्टचराश्च।

तत्रच दीधितिव्याख्याने प्रामाण्यवादस्यास्यातिकठिनदुरूहयुक्ति गर्भितस्य पण्डितानामपि मतिकुण्ठनपटोः प्रायः पठनपाठनादिषु तृतीय विप्रतिपत्त्यन्त मुपयुज्यमान स्यापि दुर्लभता मालोच्य मुद्रणे प्रायतामहि।

तत्रापि तृतीयपञ्चमविप्रतिपत्त्यो श्शिरोमणिना अव्याख्याततया ऽतएव गदाधरीयस्या प्यभावेन तत्र मूलमथुरानाथीया दुद्धृत्य तं भाग ममुद्रयाम।

प्रायशश्च यत्रयत्र पृष्ठे यावान् गदाधरीयस्य भागो मुद्रित स्तावतांशस्य मणिदीधिती अपि तदुपरितनभाग एवा मुद्रयाम।

अस्यच --

१ - अस्मदीय "श्रीहयवदनलीलासदन" [पुस्तकालय] स्थं पत्रालेखितं ज्ञप्तिवादान्तं पुस्तकं प्राय श्शुद्ध मेकम्,

२ - विद्वद्वर्याणां - ति - अ - कु - श्रीनिवासाचार्याणा मन्तिम पत्रमात्रविहीनं ज्ञप्तिवादान्त मेकोनचत्वारिंश दुत्तरशतपत्रात्मकं प्राय श्शुद्ध मपरम्,

३ - ” तिरुप्पुट्कुळि - श्रीगोपालताताचार्याणां ताळपत्रलिखितं सम्पुटद्वयात्मकं प्राय श्शुद्धं ज्ञप्तिवादान्तं चान्यत्,

४ - ” तण्डि - श्री - श्रीनिवासताताचार्याणां ताळपत्रलिखितं तृतीयविप्रतिपत्त्यन्तं प्राय श्शुद्ध श्चेतरत,

५ - ” मन्नसालघट्टाग्रहारस्थानां, कवितार्किकसिंह रघुनाथाचार्याणां ताळपत्रलिखितं ज्ञप्तिवादान्तं प्राय श्शुद्धंच परम्,

इति गदाधरीयपुस्तकपंचकम्,

१ - अस्मदीय श्रीहयवदनलीलासदनस्थं पत्रलिखितं प्राय श्शुद्ध मेकं दीधितिपुस्तकमान्तम्,

२ - द्वितीयं चोक्तपुस्तकशालास्थं कलकत्तानगरमुद्रित तत्वचिन्तामणिपुस्तक मपरम्,

३ - विद्वद्वर्याणां - श्रीतिरुप्पुट्कुळि गोपालताताचार्याणां ताळपत्रलिखितं प्राय श्शुद्ध मान्तं दीधितिपुस्तकं चेतरत,

इति मूलपुस्तकत्रयं चेति पुस्तकाष्टक मवलम्ब्य शोधन मकारि।

ज्ञप्तिवादोपरितनभाग उत्पत्तिवादेपि कियद्दूरपर्यन्तं गदाधरीयस्या स्मन्निकटे सत्वे प्यान्त मभावा न्नेदानीं तन्मुद्रण मारब्धम् इतःपरं यदा पुन रान्तं पुस्तकं लभ्येत, तदा तन्मुद्रणे कृतसंकल्पा एव स्मः। यदिच ये केचि दुक्तपुस्तक मान्तं प्रेषयेयु स्तदा तेषा मुपरि कार्तज्ञ्यं वक्ष्यामो वयम्।

यथाबलं शोधने कृतावधानस्यापि मानुष्यकसुलभेन मतिमान्द्येना नवधानेनच मे, यन्त्राधिकृताना मनवधानेनच, यदि यत्रकुत्रचि-

दशुद्धानि स्यु स्तेषां ज्ञापने द्वितीयसंस्कारे पुन स्तेषां संशोधनं क्रियेत ।

इति सविनयं निवेदयति -

प्र. अनन्ताचार्यः ।

सम्पादकः ।

विषयानक्रमः ।

श्री. ।

श्रीमते हयग्रीवाय नमः ।

# शास्त्रमुक्तावळी ।

---

## प्रामाण्यवादः ।

---

### दीधितिः ।

---

गिरंगुरूणांहृदयेनिधाय विधायसिद्धान्तसरोऽवगाहम् ।
संक्षेपतः श्रीरघुनाथनामा चिन्तामणेर्दीधितिमातनोति ॥

---

### गदाधरीयम् ।

---

नत्वा नन्दतनूजसुन्दरपदं स्मृत्वा गुरोरादरा
दुर्वीमण्डलमण्डनायितयशोराशेरशेषा गिरः ।
संक्षिप्ताक्षरयातिदक्षदीधितिकृतः प्रत्यक्षचिन्तामणि
व्याख्यां व्याकुरुते गदाधरसुधीर्मोदाय विद्यावताम् ॥

गुरुकीर्तनरूपं मंगळं कुर्वाणएव स्वीयग्रन्थे प्रेक्षावत्प्रवृत्त्यर्थं तदुत्कर्षं दर्शयति ( गिरमिति ) हृदये - मानसे । निधानं - सम्बन्धसम्पादनम् । मनसि गुरुगिरस्संबन्धः स्वार्थज्ञाने जननीये तत्सहकारित्वम् । सहकारित्वं चात्र परंपरया फलोपयोगित्वं । तथाच गुरुवाक्याधीनशाब्दबोधजसंस्कारजन्यचिन्तनेन मनसा निबद्धव्य, मितरामस्मिन्निति मधं निश्चिन्येति फलितोर्थः । सिद्धांताविरुद्धपदार्थं वर्णनीयइति सूचयति ( विधायेति ). सिद्धान्ता

[ दी ] प्रेक्षावत्प्रवृत्तये

---

[ग] मूलकृता महर्षिणा तदुपजीवि पूर्वपूर्वनिबन्धकार परंपरयाचा भ्युपगतोऽर्थनिकरः, सर्णवसरः, तदवगाहनस्य निबन्धनीयार्थे सिद्धान्तापसिद्धान्त सन्देहादित चेतस्सन्ताप सन्तानो पशान्ति साधनत्वात् । तदवगाह्य । अवगाहन मन्तःप्रवेशः, सच प्रकृते निगूढतत्त्वाकलनरूपः । संक्षेपतः - संक्षिप्तोक्तितः । चिन्तामणे - चिन्तामणिनामकग्रन्थस्य । दीधिति - अर्थप्रकाशम । आतनोति - विस्तारयति । विवरणग्रन्थनिर्माणेन बहुतर सम्बद्ध करोति । चिन्तामणिग्रन्थतत्त्वार्थान् भूयस शिष्यान् बोधयतीति फलितोऽर्थः । श्रिया युक्तो रघुनाथ नामा श्रीरघुनाथनामेति मध्यमपदलोपिसमासः रघुनाथइति नामरूप - यस्येति बहुव्रीहिगर्भः । नतु श्रीरघुनाथेति स्वनामरूपं यस्येत्येक स्समासः, श्रीशब्दस्य नामानन्तर्गतत्वात्, तथासति हर्यादिपदाना न्द्वयक्षरत्वानुपपत्ते । नचास्यैव नाम श्रीयादित मित्याशंकनायम् . रघुनाथकवे रिति विरोधात् ॥ ... ...

प्रमाणतत्वे निरूपयितव्ये महर्षे प्रमाणादितत्वप्रतिपादक शास्त्रप्रयोजनाद्यभिधानस्य सफलत्व दर्शयति ( प्रेक्षावदिति ) प्रेक्षावतांविवेकवतां. प्रकृष्टफलोद्देशमन्तरेण शास्त्राध्ययने ऽ प्रवर्तमानानां मिति यावत । तेषां स्वीयग्रन्थाध्ययने प्रवृत्त्यर्थ मित्यर्थः । स्वीयग्रन्थस्य प्रयोजनवत्तां- परमप्रयोजनभूत निश्रेयसरूपफलवत्ताम् । अभिधेयसंबन्धौच्च - प्रमाणतत्वरूप प्रतिपाद्यं, प्रतिपादकत्वरूप तत्संबन्धं चाहेत्यन्वय. ॥

यद्यपि अभिधेयसम्बन्धज्ञानमपि अर्थविशेषप्रतिपादनद्वारा फलवतो ग्रन्थस्य सफलत्वज्ञान नुपयुज्यते, अत. प्रयोजनाभिधेयसंबन्धां स्तुल्यतयो पादाय तत्प्रदर्शकताकथन न संगच्छते । तथा प्येतद्ग्रन्थ प्रतिपाद्यत्वेन सामान्यत स्सप्रयोजनज्ञानविषयत्व मवगम्य ग्रन्थस्य प्रयोजनवत्तां जानतोपि प्रतिपाद्यस्य ज्ञातत्वसंशये ग्रन्थश्रवणे प्रवृत्ति र्नोपपद्य तइति विशिष्या भिधेयज्ञानम प्यपेक्षित मित्याशयेन तदभिधानम् ॥

## तत्वचिन्तामणिः ।

अथ जगदेव दुःखपङ्कनिमग्न मुद्दिधीर्षु रष्टादश विद्यास्थाने ष्वभ्यर्हिततमा मान्वाक्षिकीं परमकारुणिको मुनिः प्रणिनाय । तत्र प्रेक्षावत्प्रवृत्त्यर्थं "प्रमाणादीनां तत्वज्ञानान्निःश्रेयसाधिगम" इत्यादावसूत्रयत । तेष्वपि [ तत्र ] प्रमाणाधीना सर्वेषां व्यवस्थिति रिति प्रमाणतत्वमत्र विविच्यते ।

---

[ दी ] फलवच्छास्त्रोपकरणत्वेन प्रयोजनवत्ता मभिधेयसम्बन्धौ चाह स्वीयग्रन्थस्य ( अथेत्यादिना विविच्यतइत्यन्तेन )

---

[ ग ] "प्रमाणतत्व मत्र वि.विच्यत" इत्यतः साक्षादेवा भिधेयसंबन्धलाभः , प्रयोजनवत्तालाभश्च नतथा, तद्वाचकपदाभावात , अपि त्वर्थत एव तल्लाभइति विशेषसूचनाय पृथक्समासेन तदभिधानम् ॥

कुतोर्था त्प्रयोजनवत्तालाभ इ त्याकांक्षाया माह ( फलवच्छास्त्रोपकरणत्वेनेति ) निश्श्रेयसफलवदान्वीक्षकीशास्त्रप्रतिपादित स मुदायैकदेशार्थप्रतिपादकत्वेनेत्यर्थः । तृतीयार्थः प्रयोजनवत्वान्यथि ज्ञाप्यत्वं । "जगदुद्दिधीर्षु रान्वीक्षकी प्रणिनाय" इत्यतो मूलभूत शास्त्रस्य निश्श्रेयसरूपो द्धार प्रयोजकता लाभः । "प्रमाणादीनां तत्व ज्ञानान्निश्श्रेयसाधिगम" इत्यादा वसूत्रय दित्यनेन निश्श्रेयसोपायभूतज्ञान विषय प्रमाणादि पदार्थतत्वस्य तच्छास्त्राभिधेयत्व लाभः। एतत्त-तदन्तर्गत प्रमाणतत्वप्रतिपादकत्वलाभा न्निरुक्त शास्त्रोपकरणत्वला भ स्स्वीयग्रन्थस्य । तत्र - निश्श्रेयस्साधनानुमितौ निरुक्ता थं प्रतिपादकत्वस्य निश्श्रेयससाधनार्थ प्रतिपत्ति जनकतात्वेनैवहेतुता , तथाविधार्थे आन्वीक्षकी प्रतिपाद्य समुदायान्तर्गतत्वंच-तस्यां सहचारज्ञानेन व्याप्तिग्रहार्थ मित्यवधेयम् । "प्रणिनाय" त्यत्रैव वाक्यपरिसमाप्तौ स्तावन्मात्राच्च प्रयोजनाभिधेय सम्बन्धलाभो-न सम्भवतीति तत्र कथन्तानिवृत्तये ( विविच्यत इत्यन्तेनेति )

[आ] जगत - संसारात्मजातम् । नचा नधिकारिण शूद्रादीनध्याप यांबभूव प्रवरो मुनीनां ।

---

[ग] जगत्पदस्य वस्तुमात्रार्थकत्वे घटादीनामचेतनानां मोक्षरूपोद्धारस्य बाधेन तदीयत्वेनोद्धारेच्छा मुने र्न सम्भवतीति व्याचष्टे ( जगदिति ) परमेश्वरस्य मुक्तानां च जीवानां नोद्दिधीर्षाविषयत्व सम्भवइत्यतः संसारित्वं विशेषणम् । संसारश्च मिथ्याधी प्रभवा वासना । मत्वर्थीयार्थ उपलक्षणत्वव्यावृत्तं विशेषणत्वं । अतस्तदुपलक्षित मुक्तजीवानां व्यावृत्तिः । नच मलोपात्त दुःखपंकनिमग्नत्ववि-शेषणेनैव परमेश्वरादिव्यावृत्ति सम्भवा त्संसारि विशेषणवैयर्थ्य मिति वाच्यम् । एवं ह्यात्मपर जगत्पदस्यापि वैयर्थ्यापातात , आत्मभिन्नानां दुःखपंकनिमग्नत्वविशेषणेनैव वारणात् दुःखपंकनिमग्नत्वस्यो द्दिधीर्षाविषयत्वोद्देश्य जगत्पदार्थव्यावर्तकतया विवक्षितत्वे उद्देश्यतावच्छेदकीभूत तद्वाचकपदस्य जगत्पद पूर्वमुपादान-क्रियेत्युत " यतो जगत दुःखपंकनिमग्न अतस्तदुद्दिधीर्षुः " इत्यर्थस्यैव विवक्षणा ज्जगत्पदार्थता वच्छेदकमात्रस्यैव उद्दिधीर्षितत्वोद्देश्यता वच्छेदकतया तत्र संसारित्वान्तर्भावस्या वश्यकत्वात । आत्मपदस्या वच्छेदक शरीरव्यावृत्तस्य समवायेन वासना विशेषवत्वस्य लाभाय । लक्षणयापि समूहएव प्रामाणिकानां जगत्पदस्य व्यवहारात । समूहार्थकं जगत्पदं न त्वशेषार्थकम् , एवकारेणैव तल्लाभात । अथवा जगत्पदमेवा शेषार्थकम् , ततश्च ग्राहकएवकारः-नतु तदर्थक , यथा " सर्वएव शुभः काल " इत्यादौ । ...

ननु शूद्रादीना मपि जगदन्तर्गततया ऽर्थविद्या नधिकारिणां तेषा मर्थज्ञानेच्छया शास्त्रप्रणयने महर्षिः प्रत्यवेयात , अनधिकारिणा मर्थज्ञानेच्छया शब्दप्रयोगरूप तदध्यापनस्य प्रत्यवायहेतुत्वात , इत्यधिकारित्वमपि विशेषणमस्त्विव त्याशंकां परिहरति ( नचेति ) शूद्रादीन , शूद्रत्व जात्याक्रान्त शरीरविशेष विशिष्टात्मनः । अध्यापयां बभूव - उद्दिश्य शास्त्रं प्रणिनाय । तादृश

[ दी ] येनाशंक्येतापि प्रत्यवायस्तस्य । नचानधिकारिणां शास्त्रावलोकनेनाऽर्थावगमे प्रत्यवयन्ति प्रणेतारश्शास्त्राणाम् । उद्देश्यतातु कीटपतङ्गादीनामपि विशिष्टशरीरपरिग्रहाद् र्थावगमेनस्य भवन्ती न कामपि क्षतिमावहतीति सर्वंश्चतुरस्रम् [सुस्थं] । टीकाकृतस्तु समाधिसौकर्यादभ्युपेत्य प्रत्यवायममुनैवान्यथैव समादधिरे ।

---

[ग] शरीरोपलक्षितात्मनां शास्त्रार्थज्ञान भागितया तदुद्देश्यत्वादिति-भावः । अनधिकारिता प्रयोजक शरीरावच्छिन्न ज्ञानेच्छया शाब्द प्रयोगस्यैव प्रत्यवाय हेतुत्वात् इत्याशयेनाह ( येनेति ) स्वप्रयुक्तशब्दा दैववशेनानधिकारिणा मर्थज्ञानं न प्रत्यवायहेतुरित्याह ( नचेति ) तथासति ब्राह्मणादिमात्रो द्दिधीर्षया शास्त्रप्रणयनादपि प्रत्यवेयादिति भावः । ... ... ...

ननु जन्यज्ञानस्य शरीरावच्छिन्नत्व नियमात् शूद्राद्यात्मनामुद्धारेच्छया शास्त्रप्रणयने शूद्राद्यात्मनां ज्ञानभागितयो द्देश्यत्वे - शूद्रादिशरीरावच्छिन्न ज्ञानेच्छा मुनि रावश्यकी त्याशंकां परिहरति ( उद्देश्यतेति ) अर्थज्ञानवत्त्वेने च्छाविषयता त्वित्यर्थः । ( विशिष्टशरीरेति ) ब्राह्मणत्वादि विशिष्टशरीरं परिगृह्य एतच्छास्त्रार्थमवगच्छे दित्यभिसन्धानेना नाधिकारि शरीरावच्छिन्नतया ज्ञानस्येच्छया नवगाहने प्युपपद्यमानेत्यर्थः । अन्यथा कीटादि शरीरस्य शास्त्राधीनज्ञानानवच्छेदकत्वनिश्चया त्तदात्मनामुद्देश्यतैव न निर्वहे दिति-भावः । क्षतिं - प्रत्यवायं । नन्वेवं मुनेरुत्पन्नोऽपि प्रत्यवाय स्तपः प्रभावा न्नश्यतीति टीकाकारसमान विरोध इत्यत आह (टीकाकृतस्त्विति)

ननु प्रमाकरणत्वरूप प्रमाणतत्वावधारणे तद्घटक प्रमातत्वावधारणस्या प्यपेक्षिततया तस्य स्वतः परतश्चा सम्भवेन प्रमाणतत्वस्य दुरवधारणतया तदवधारणसम्पादनेन शास्त्रस्य निःश्रेयसोपयोगित्वं यत्सूत्रकृतोक्तं तन्नयुज्यते इत्याक्षेपे प्रामाण्यावधारणस्य व्यभिचारान्यथासिद्धिभ्यां प्रवृत्त्यहेतुतया तदसम्भवेपि न क्षतिरित्याशंकन मथाकि

[ म ] ननु प्रमाणादीनां तत्वं प्रतिपादयच्छास्त्रं परंपरया निश्श्रेयसेन सम्बध्यत इति न युक्तम् - प्रामाणत त्त्वावधारणस्या शक्यत्वात् , तद्धिप्रमातत्वावधारणाधीनम् , तच्च स्वतः परतोवा, नसम्भवति , वक्ष्यमाणदूषणगणग्रासात् ।

---

[ दी ] प्रामाण्यनिश्चायनेन निश्श्रेयसार्थिनं प्रवर्तयच्छास्त्रं निश्श्रेयसेन सम्बध्यत इति [आशयं] मन्वान आदेशयति

---

[ग] मित्यादिना मूलकृताऽसंगतम् , प्रवर्तकतया प्रामाण्य निश्चयापेक्षाया आक्षेपेऽनुक्तत्वात् , अतः प्रवर्तकतया प्रामाण्यनिश्चयापेक्षैवा ऽऽक्षेपक स्याभिप्रेते त्यभिमानमूलकतया शंकां संगमयति - ( प्रामाण्येति ) प्रामाण्यनिश्चायनेन - निश्श्रेयसार्थप्रवृत्तिजनकज्ञाने प्रामाण्यनिश्चय स म्पादनेन , निश्चीयमान प्रामाण्यकस्य स्वप्रतिपाद्य प्रथमसूत्रार्थ ज्ञानस्य सम्पादनेनेति यावत । ( निश्श्रेयसेन सम्बध्यत इति ) निश्श्रेयसोपयोगि भवितु मर्हतीत्यर्थः । प्रमात्वस्य दुरवधारणतयाच सूत्राधीन प्रयोजन वत्ताज्ञाने निश्चीयमान प्रामाण्यकत्वं न सम्भवतीति शेषः । " प्रामा-ण्यनिश्चायने " नेत्यस्य यथाश्रुत परतातु न संगच्छते, एतच्छास्त्रस्य मोक्षसाधनताज्ञाने प्रामाण्याबोधकत्वात् , शास्त्राधीन प्रमात्वपदे स्व-तस्त्वाप्रसक्त्या स्वतः परतोवेत्यादिना स्वतस्त्वनिराकरणासंगतेश्च ! इतिमन्वानः - नन्वित्याक्षेपकर्तु रित्याशयंमन्वानः । अभिमानश्चायं न-दुर्घटः, तथाहि - " परंपरये " त्यस्य प्रवर्तकज्ञाने प्रामाण्यनिश्चायने-नेत्यर्थकतायाः सम्भवात् " प्रमाणतत्वावधारणस्ये " त्यादेश्च शास्त्र श्रवणप्रवृत्तिनिर्वाह्य शास्त्राधीन प्रमाणतत्वावधारणस्या शक्यत्वात् . यत स्तत्र परंपरया प्रवर्तकज्ञाने प्रमातत्वावधारण मपेक्षितं- तच्च स्वतः परतश्च न सम्भवती त्यर्थकताया अपि सम्भवात् । नचैव मेतदर्थकता भिप्रायस्सम्भवदुक्तिकएव मूलकृत इतिकथं तदभिमान इतिवाच्यम् सम्मुखतएवा क्षेपसंगते स्तथाभिप्रायस्या नौचित्यात् । प्रामाण्यावध रणात्मकज्ञानस्यैव प्राग्दुर्घटत्वोक्ते " रथ " त्यादिनातस्यैवानुपयोगित

[म] अथ किं प्रामाण्यज्ञानेन, ? प्रवृत्तिमात्रे तस्य व्यभिचारात् । बहुवित्तव्यया शासप्राप्त्ये प्रवृत्तिश्चा वश्यकार्थ निश्चयादेव । नच यस्य संशयव्यतिरेक निश्चयौ प्रवृत्ति प्रतिबन्धकौ

---

[दी] ( अथेति) प्रामाण्यज्ञानेन - प्रामाण्यनिश्चयेन । यस्य संशय-व्यतिरेकनिश्चयौ - यद्व्यतिरेकसंशयनिश्चयौ ।

---

[ग] शंकितु मुचितम् , नतु तज्ज्ञानसामान्यस्य, तथास त्युत्तरकालं निश्चयमात्रस्यैदोपयोगिताव्यवस्थापन मप्यसंगतंस्या दतो ज्ञानपदं निश्चयपरतया व्याचष्टे ( प्रामाण्यज्ञानेनेति ) " यस्य संशयव्यतिरेक-निश्चयाविति " मूलं व्यतिरेकज्ञान सामान्यपरतया अनुपदं वर्णनीयं, सामान्यलाभश्च यावद्विशेषोपादानादेव, तच्च यथाश्रुते नोपपद्यते, यत्सं-शयानात्मकयदि व्यतिरेक संशयानुपादानात् , तदभाववत्त्वेदकोटिक तद्भाव संशयस्य तत्संशयानात्मकत्वात । एवं यत्संशयादिपदं यद्रू पावच्छिन्न विषयक संशयादिपर मवश्यं वाच्यम् , व्याप्तिसंशय सा मान्यांतर्गतानां किंचिद्रूपेण व्याप्तिप्रकारक नानासंशयाना मनुमित्युत्प त्ता वप्रतिबन्धकत्वात् । तथाच व्याप्तित्वावच्छिन्न संशयानात्मको पि व्याप्यभावाभावत्वादिना व्याप्तिविषयक व्याप्यभावादि संशयः स्सम्भवतीति व्याप्तित्वाद्यवच्छिन्न संशयत्वेन तदुपादानासम्भवा-दसंगतिः, अतो व्यतिरेकपदं व्यत्यासेन व्यतिरेक विषयक संशयनिश्च-यपरतया व्याचष्टे ( यस्येति ) परंतु - यथाश्रुत यस्येति षष्ठ्याः प्रतियोगित्वरूपार्थो व्यतिरेकान्वयी , अन्यश्च विषयतारूपः संशया-न्वयी, अत स्तस्या एकार्थपरत्वनिर्वाहाय व्यतिरेकपदं व्यत्यस्यति-( यस्येति ) नच घटस्य संशय इत्यादौ एक धर्मिक घटतदभावा व-गाहि ज्ञानलाभाय संशयपदं व्यतिरेकावगाहि समान धर्मिकज्ञानपरं, प्रतियोगित्वं विषयत्वच षष्ठ्या अर्थः, संशयपदार्थैकदेशे व्यतिरे-के प्रतियोगित्वस्य ज्ञानेविषयत्वस्यान्वय इति व्युत्पत्तिरावश्यकीति-षष्ठ्या अर्थद्वयपरत्व मावश्यकमेवेति कथमेतदितिवाच्यम् ; यतःस्वा-

[ दी ] तेन व्यतिरेकज्ञानत्वेन प्रतिबन्धकतालभ्यते ।

---

[गि] वच्छिन्न प्रतिबध्यता निरूपित प्रतिबन्धकतावच्छेदकत्व स्वसामानाधिकरण्यभयसम्बन्धेन विषयितावैशिष्ट विषयिताशालिज्ञानं संशय पदार्थः, चरमविषयितायामेव षष्ठ्यर्थस्य निरूपकत्वस्य निरूप्यत्वस्यवान्वयः, एवंचा भावस्य संशयपदार्थाघटकतया तत्समभिव्याहृत षष्ठ्या अभावान्वयि तदीय प्रतियोगितार्थकताया अनावश्यकता, नच विषयितानिरूपकत्वं विषयिता प्रतियोगित्वमेव, तथाच व्यतिरेकेसंशयेचान्वयेक रवार्थ षष्ठ्याइति कथं तदर्थभेदभयेन व्यतिरेकपदव्यन्यासइतिवाच्यम्, अभावनिरूपितस्य विषयितानिरूपितस्यच प्रतियोगित्व स्यैक जातीयत्वविरहा दित्याहुः। ... ...

अत्र संशयादिपदं प्रतिबध्य समानधर्मितावच्छेदकक यद्रूपावच्छिन्नाभाव संशयादि सामान्य पर मवश्यं वाच्यं, अन्यथा समूहालंबनरूप घटाभावादिनिश्चयात्मक व्याप्यवादि व्यतिरेक संशयादि प्रतिबध्यस्य घटादिज्ञानस्य व्याप्यवादिनिश्चयाहेतुकत्वा द्व्यभिचारापत्तेः। एवंच व्यतिरेकनिश्चयत्वादि घटक व्यतिरेकज्ञानत्व पुरस्कारेण तज्ज्ञानसामान्य निवेशादेवो पपत्ते स्तद्घटकदलांतरोपादान मितरपदोपदानं च व्यर्थम्, यदिच संशयत्वादि व्यापकत्वेन प्रतिबन्धकता निवेशे तज्ज्ञानत्व व्यापकता घटक प्रतियोगितावच्छेदकत्वाभावा दन्यएव तदभावः संशयत्वादि व्यापकता घटकइत्यवैयर्थ्यम्, संशयत्वनिश्चयत्वे अव्याप्यवृत्तिजातिविशेषाविति मते तच्छरीरे ज्ञानत्वस्यानन्तर्भावादपि न वैयर्थ्यशंका, तथाप्यनुचितंगौरवं संशयनिश्चययोः पृथङ् निवेशपक्षेदुर्वारमेवेति मनसिकृत्य फलितार्थमाह ( तेनेति ) (व्यतिरेकज्ञानत्वेनेति ) अनतिरिक्तवृत्तित्वरूपा वच्छेदकत्वं तृतीयार्थः नतुस्वरूपसम्बन्धरूपं । ग्राह्याभावज्ञानत्वस्य ग्राह्यज्ञान प्रतिबन्धकतावच्छेदक ग्राह्याभावनिश्चयत्व घटकतया ग्राह्यनिश्चयस्य, ग्राह्यज्ञानाहेतुतया व्यभिचारस्य दुर्वारत्वात । पर्याप्तिनिवेशेचतदर्थपर्या

[ दी ] ग्राह्यसंशयस्यतु न प्रतिबन्धकतेतिभावः ।

---

[ग] चने लाघवासंभवात् । यद्व्यतिरेकज्ञानत्वावच्छिन्न प्रतिबन्धकताकं य त्त तन्निश्चयत्वावच्छिन्नजन्य [illegible] सामान्यव्याप्तिः,पर्यवसितेति न सा ध्यसाधनयो वैयधिकरण्यम् । नवेश्वरीय प्रामाण्यनिश्चय जन्यतामा दाय सिद्धसाधनावसरः ।

नच माध्यमिकपूर्वपक्षे अथेत्याद्याशंका न नैयायिकस्य, तेन प्रामा· ण्यनिश्चयोपयोगितास्वीकारात , किंतु तटस्थस्य, तदुपरिच नचेत्याद्याशं का पुन र्माध्यमिकस्यैव, तेनेश्वरानभ्युपगमेन न सिद्धसाधनावसरः, साध्य स्य मतद्वयसिद्धतायामेव तद्दोषादिति वाच्यम् । एवमपि तटस्थे नार्थान्तरोद्भावनस्य दुर्वारत्वात् । नच स्वतः परतश्च प्रामाण्यस्य ग्रहणं निराकुर्वतो माध्यमिकस्य कथं प्रवृत्तौ प्रामाण्यनिश्चयहेतुकत्व साधनं संगच्छतइति वाच्यम् । प्रामाण्यनिश्चायनेन , शास्त्रस्य निश्श्रेयसो पयोगिता वादिनं नैयायिकं पराभवितुं तन्मत मालम्ब्य माध्यमिकस्यापि प्रवृत्तौ प्रामाण्यनिश्चयोपयोगिता व्यवस्थापन संभवात् ।

ननु अव्यभिचारव्यतिरेकरूप व्यभिचारस्य संशयो निश्चयश्चा व्यभिचारग्रहप्रतिबन्धकः - व्यभिचारसंशयप्रतिबन्धकतायाः व्याप्तिग्र- होपाये मणिकारै रेवोक्तत्वात , तथाच व्यभिचारज्ञानसामान्यप्रति· बध्ये ऽव्यभिचारानिश्चयाजन्ये ऽव्यभिचारनिश्चये व्यभिचार इत्यंत आह ( ग्राह्यसंशयस्येति ) अव्यभिचारव्यतिरेक संशयरूपस्येत्यादिः । नप्रतिबन्धकता - व्याप्तिग्रहइति शेषः । तथाच व्यभिचारसंशय- स्य व्याप्तिग्रहप्रतिबन्धकत्वाभिधानं मतविशेषावलम्बनेनै वोक्तमिति नविरोधइति भावः । एतेन घटादिसंशयस्य घटादिग्रहाप्रतिबन्ध- कतया संशयपदेन घटादिनिश्चयाहेतुके घटादिज्ञाने व्यभिचारं वा- रयतां मिश्राणां प्रतिबन्धकसंशयादौ यदभावत्व प्रकारकत्व नैयत्य विवक्षया ऽव्यभिचारानिश्चयाजन्य तन्निश्चये ऽव्यभिचाराभावत्वा प्रका- रकव्यभिचारत्वप्रकारकं संशयसाधारण प्रतिबन्धकताके व्यभिचार वारण मयुक्त मिति ध्वनितम् । घटादिसंशयस्य तन्निश्चयइव व्य-

